## संस्कृतम् इति पदस्य प्रयोगः भाषाविषये कदा आरब्धः?

- यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्। रावणं मन्यमाना मां सीता भीता भविष्यति। - रामायणे। सीतादर्शनार्थं लङ्कां गतः हनूमान्, सीतां दृष्ट्वा मनसि एवं चिन्तयति – यदि द्विजातिः इव संस्कृतां वाचं प्रदास्यामि, तर्हि मां रावणं मन्यमाना सीता भीता भविष्यति। तस्मात् संस्कृतां मानुषीं वाचं वदामि इति। अतः भाषाविषये संस्कृतपदस्य प्रयोगः प्राचीनः इति ज्ञायते।

## संस्कृतं लोके प्रसिद्धमासीत् किम्?

अन्तरं त्वहमासाद्य राक्षसीनामिह स्थितः।
शनैराश्वासयिष्यामि सन्तापबहुलामिमाम्॥ ५.३०.१६॥
अहं त्वति तनुश्चैव वानरश्च विशेषतः।
वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्॥ ५.३०.१७॥
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति। सुन्दरकाण्डम्,

- अत्र मानुषीं संस्कृतां भाषाम् इति प्रयुङ्क्ते हनूमान्। अतः लोके इयं भाषा प्रसिद्धा स्यात् इति सम्भाव्यते।
- पाणिनिः अपि लौककभाषा इति वक्तुं भाषा (भाषायां सदवसश्रुवः ३/२/१०८, प्रथमायाश्च द्विवचने भाषायाम् ७/२/८८, सर्वत्र विभाषा गोः) इति पदं प्रयुङ्क्ते। अतः जनसाधारणी इति गम्यते।
- सूतसंवादः - एवं हि कश्चिद्वैयाकरण आह - कोस्य रथस्य प्रवेतेति॥ सूत आह - अहमायुष्मन्नस्य रथस्य प्राजितेति॥ वैयाकरण आह - अपशब्द इति॥ सूत आह - प्राप्तिज्ञो देवानांप्रियः, न त्विष्टिज्ञः इष्यत एतद्रूपमिति॥ वैयाकरण आह - अहो नु खल्वनेन दुरुतेन बाध्यामह इति॥ सूत आह - न खलु वेञः सूतः, सुवतेरेव सूतः। यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्॥ (महाभाष्यम् – अजेर्व्यघञपोः २/४/५६) अयं सूतवैयाकरणयोः संवादः महाभाष्ये दृश्यते। अस्मिन् संवादे सूतः वैयाकरणेन प्रयुक्तं पदम् असमीचीनम् इति मन्यते। एतादृशसम्भाषणोपन्यासेन प्रायः लोके इयं प्रथिता भवेत् इति ऊह्यते।
- संस्कृतस्य प्रयोगक्षेत्रम् अपि विस्तृतम् आसीत्। भाष्ये लिख्यते – शवतिः गतिकर्मा कम्बोष्वेव भाषितो भवति। विकार एनमार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु॥ पश्पशाह्निकम्, महाभाष्यम्, पृष्ठम् ७१। एतेषु वाक्येषु भारतस्य विविधजनपदानां स्थानानां च उल्लेखः प्राप्यते। तस्मिन् जनपदे स्थाने वा गमनार्थे प्रयुज्यमानानि पदानि कानि इति उल्लिख्यते। तेन संस्कृतस्य प्रयोगक्षेत्रं विस्तृतम् आसीत् इति ज्ञायते।
- अस्मिन् लेखने पाणिनीयशास्त्रे संस्कृतस्य लोकभाषात्वस्वीकारे गमकानि कानि इति चर्चा वर्तते - https://vidwannrs.in/public/pdf/112.pdf#page=13

## द्विविधाः शब्दाः

- लोके भवाः शब्दाः लौकिकाः, वेदे भवाः वैदिकाः।
- य एव लौकिकास्त एव वैदिकास्त एव तेषामर्थः – शाबरभाष्यम्। (१/३/३०) अन्येऽपि इदं मतमङ्गीकुर्वन्ति – तद्यथा वाजसनेयीप्रातिशाक्ये 'समत्वात्' उक्तम्। लोकेवेदशब्दयोः समत्वम् इत्यर्थः।
- एवं लोकवेदशब्दयोः भेदाभावेऽपि आनुपूर्विनियतत्वम् अनियतत्वं च आश्रित्य भेदः अपि वर्तते। अतः एव एतादृशप्रयोगाः अपि दृश्यन्ते – केषां शब्दानाम्? वैदिकानां लौकिकानां च। अथर्वसंहितायां च 'अहं सत्यमनृतं यद्वदामि, अहं दैवीं परि वाचं विशश्च (६/६१/२), अत्र वैदिकसंस्कृतं सत्यमिति अभिहितम्, तत्र आनुपूर्विनियतत्वात्। सर्वदा समानरूपयुक्तत्वात्। लौकिकभाषा अनृतमिति अभिहितम्। तत्र आनुपूर्विनियमरहितत्वात्।

## व्याकरणम्[1]

### व्याकरणस्य प्राचीनत्वम्

- व्याकरणस्य मूलं वेदः इति प्रसिद्धिः। अतः कदा आरब्धमिति वक्तुं न शक्यते।
- पतञ्जलिना वेदवाक्यम् उद्धृतम्। (सम्प्रति उपलभ्यमाने वेदे इदं वाक्यं नास्ति) – ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयोऽज्ञेयश्च। अस्मिन् वेदवाक्ये वेदाङ्गानाम् उल्लेखः प्राप्यते। वेदवाक्ये एव उल्लेखात् प्राचीनत्वं ज्ञायते।
- व्याकरणे प्रसिद्धाः केचन शब्दाः वेदे अपि दृश्यन्ते। तद्यथा – ओङ्कारं पृच्छामः, को धातुः किं प्रातिपदिकम्, किं नाम आख्यातम्, किं लिङ्गं किं वचनम्, का विभक्तिः कः प्रत्ययः कः स्वरः कः उपसर्गो निपातः, किं वै व्याकरणम्, को विकारः, को विकारी, कतिमात्रः, कतिवर्णः, कत्यक्षरः, कतिपदः, कः संयोगः, किं स्थाननादानुप्रदानानुकरणम् – गोपथब्राह्मणम्।

### व्याकरणमिति पदस्य प्राचीनत्वम्

- तस्मै स होवाच - द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ||४|| तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। ५। मुण्डकोपनिषत्।
- व्याकरणपदस्य उल्लेखः रामायणादिषु अपि दृश्यते। तद्यथा – नूनं व्याकरणं कृत्स्नम् अनेन बहुधा श्रुतम्। बहु व्याहरतानेन न किञ्चित् अपशब्दितम्॥ किष्किन्धाकण्डम् ३/२९। रामः हनुमतः प्रशंसां कुर्वन् वाक्यम् इदं प्रयुङ्क्ते। अनेन हनुमता निश्चयेन व्याकरणं बहुधा श्रुतम्। यतः अनेन एकोऽपि अपशब्दः न उच्चारितः। इत्यर्थः अस्य श्लोकस्य।
- महाभारते । ५ । ४३ । ६१ । सर्वार्थव्याकरणात् व्याकरणात् वैयाकरण उच्यते। तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा। अर्थान् प्रकटीकरोति इति वैयाकरणः। ब्रह्मणः सकाशात् सर्वार्थानां व्याकरणात् सः अपि वैयाकरणः।

### व्याकरणस्य वेदाङ्गत्वम्

#### *वेदाङ्गानि*

- व्याकरणं वेदाङ्गेषु अन्यतमम्।
- वेदाङ्गानि विद्यास्थानेषु अन्तर्भवन्ति - "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश" ।
- वेदस्य अङ्गम् – वेदाङ्गम्। वेदपुरुषस्य अङ्गानि एतानि। अङ्गमित्यस्य पदस्य व्युत्पत्तिः " अङ्ग्यते ज्ञायते अनेन इत्यङ्गम्" इत्यस्ति । वेदार्थनिर्णयाय एतानि अङ्गानि।
- वेदाङ्गानि षट् – शिक्षा व्याकरणं छन्दः निरुक्तं ज्यौतिषं कल्पः।
- छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते। (पाणिनीयशिक्षा ४१ -४२) अस्मिन् श्लोके वेदं, वेदपुरुषत्वेन परिकल्प्य अङ्गानि उक्तानि।
- http://ancientindianwisdom.com/vedas-and-vedic-system/vedangas

[1] संस्कृत व्याकरणशास्त्र के उत्पत्ति और् प्राचीनता, page 54, संस्कृत व्याकरण शास्त्र का इतिहास।